# ॥ श्रीशुक्राष्टोत्तरशतनामस्तोत्रम् ॥

शुक्र बीज मन्त्र - ॐ द्राँ द्रीं द्रौं सः शुक्राय नमः ॥

शुक्रः शुचिः शुभगुणः शुभदः शुभलक्षणः ।
शोभनाक्षः शुभ्ररूपः शुद्धस्फटिकभास्वरः ॥ १॥

दीनार्तिहारको दैत्यगुरुः देवाभिवन्दितः ।
काव्यासक्तः कामपालः कविः कळ्याणदायकः ॥ २॥

भद्रमूर्तिर्भद्रगुणो भार्गवो भक्तपालनः ।
भोगदो भुवनाध्यक्षो भुक्तिमुक्तिफलप्रदः ॥ ३॥

चारुशीलश्चारुरूपश्चारुचन्द्रनिभाननः ।
निधिर्निखिलशास्त्रज्ञो नीतिविद्याधुरन्धरः ॥ ४॥

सर्वलक्षणसम्पन्नः सर्वापद्गुणवर्जितः ।
समानाधिकनिर्मुक्तः सकलागमपारगः ॥ ५॥

भृगुर्भोगकरो भूमिसुरपालनतत्परः ।
मनस्वी मानदो मान्यो मायातीतो महाषयः ॥ ६॥

बलिप्रसन्नोऽभयदो बली बलपराक्रमः ।
भवपाशपरित्यागो बलिबन्धविमोचकः ॥ ७॥

घनाशयो घनाध्यक्षो कम्बुग्रीवः कळाधरः ।
कारुण्यरससम्पूर्णः कळ्याणगुणवर्धनः ॥ ८॥

श्वेताम्बरः श्वेतवपुः चतुर्भुजसमन्वितः ।
अक्षमालाधरोऽचिन्त्यः अक्षीणगुणभासुरः ॥ ९॥

नक्षत्रगणसञ्चारो नयदो नीतिमार्गदः ।
वर्षप्रदो हृषीकेशः क्लेशनाशकरः कविः ॥ १०॥

चिन्तितार्थप्रदः शान्तमतिः चित्तसमाधिकृत् ।
आधिव्याधिहरो भूरिविक्रमः पुण्यदायकः ॥ ११॥

पुराणपुरुषः पूज्यः पुरुहूतादिसन्नुतः ।

अजेयो विजितारातिर्विविधाभरणोज्ज्वलः ॥ १२॥

कुन्दपुष्पप्रतीकाशो मन्दहासो महामतिः ।
मुक्ताफलसमानाभो मुक्तिदो मुनिसन्नुतः ॥ १३॥

रत्नसिंहासनारूढो रथस्थो रजतप्रभः ।
सूर्यप्राग्देशसञ्चारः सुरशत्रुसुहृत् कविः ॥ १४॥

तुलावृषभराशीशो दुर्धरो धर्मपालकः ।
भाग्यदो भव्यचारित्रो भवपाशविमोचकः ॥ १५॥

गौडदेशेश्वरो गोप्ता गुणी गुणविभूषणः ।
ज्येष्ठानक्षत्रसम्भूतो ज्येष्ठः श्रेष्ठः शुचिस्मितः ॥ १६॥

अपवर्गप्रदोऽनन्तः सन्तानफलदायकः ।
सर्वैश्वर्यप्रदः सर्वगीर्वाणगणसन्नुतः ॥ १७॥

एवं शुक्रग्रहस्यैव क्रमादष्टोत्तरं शतम् ।
सर्वपापप्रशमनम् सर्वपुण्यफलप्रदम् ॥ १८॥

यः पठेच्छृणुयाद्वापि सर्वान्कामानवाप्नुयात् ॥ १९॥